# *श्री कृष्ण स्तोत्रम् (मोहिनी कृत)*

मोहिनी उवाच

सर्वेन्द्रियाणां प्रवरं विष्णोरंशं च मानसम् ।
तदेव कर्मणां बीजं तदुद्भव नमोऽस्तु ते ॥ 1 ॥

स्वयमात्मा हि भगवान् ज्ञानरूपो महेश्वरः ।
नमो ब्रह्मन् जगत् सृष्टः तदुद्भव नमोऽस्तु ते ॥ 2 ॥

सर्वाजित जगत्जेतः जीवाजीव मनोहर ।
रतिबीज रतिस्वामिन् रतिप्रिय नमोऽस्तु ते ॥ 3 ॥

शश्वद् योषित् अधिष्ठान योषित् प्राणाधिकप्रिय ।
योषिद्वाहन योषास्त्र योषिद्बन्धो नमोऽस्तु ते ॥ 4 ॥

पतिसाध्यकर अशेषरूपाधार गुणाश्रय ।
सुगन्धि वातसचिव मधुमित्र नमोऽस्तु ते ॥ 5 ॥

शश्वद्योनि कृताधार स्त्रीसन्दर्शन वर्धन ।
विदग्धानां विरहिणां प्राणान्तक नमोऽस्तु ते ॥ 6 ॥

अकृपा येषु तेऽनर्थं तेषां ज्ञानं विनाशनम् ।
अनूहरूप भक्तेषु कृपासिन्धो नमोऽस्तु ते ॥ 7 ॥

तपस्विनां च तपसां विघ्नबीजाय लीलया ।
मनः सकामं मुक्तानां कर्तुं शक्तं नमोऽस्तु ते ॥ 8 ॥

तपः साध्यः तथा आराध्यः सदैवं पाञ्च भौतिकः ।
पञ्चेन्द्रिय कृताधार पञ्चबाण नमोऽस्तु ते ॥ 9 ॥

मोहिनीत्येवं उक्त्वा तु मनसा सा विधेः पुरः ।
विरराम नम्रवक्त्रा बभूव ध्यान तत्परा ॥ 10 ॥

उक्तं माध्यन्दिने कान्ते स्तोत्रं एतन् मनोहरम् ।
पुरा दुर्वाससा दत्तं मोहिन्यै गन्धमादने ॥ 11 ॥

स्तोत्रं एतन् महापुण्यं कामी भक्त्या यदा पठेत् ।
अभीष्टं लभते नूनं निष्कलङ्को भवेत् ध्रुवम् ॥ 12 ॥

चेष्टां न कुरुते कामः कदाचिदपि तं प्रियम् ।
भवेत् अरोगी श्रीयुक्तः कामदेव समप्रभः ।
वनितां लभते साध्वीं पत्नीं त्रैलोक्य मोहिनीम् ॥ 13 ॥

॥ इति श्री मोहिनी कृत कृष्ण स्तोत्रं संपूर्णम् ॥